# अक्षररामायणम्

https://sa.wikisource.org/s/11ji
ॐ रामलक्ष्मणौ भ्रातरौ नमस्कृत्वा सितासितौ ।
वने तस्मिन् विचरन्तौ सीतां च जनकात्मजाम् ॥ १

श्रीः धन्यं मंगल्यमायुष्यं अलक्ष्मीकलिनाशनम् ।
रामायणं प्रवक्ष्यामि मातृकाक्षरयोजितम् ॥ २

अ अयोध्यधिपतेः पुत्राः चत्वारस्सूर्यवर्चसः ।
राम-लक्ष्मण-शत्रुघ्नाः भरतश्च महाबलः ॥ ३

आ आचारविनयोपेताः सत्यसन्धा दृढव्रताः ।
शूरास्सत्यप्रतिज्ञाश्च सर्वे दशरथात्मजाः ॥ ४

इ इङ्गितेन तु कैकेय्याः स्वपुत्रहितकाम्यया ।
दृढव्रतो राज्ञ इष्टो रामस्संप्रस्थितो वनम् ॥ ५

ई ईहितेनाभिषेकेन रामस्संप्रस्थितो वनम् ।
सीता चानुगता साध्वी लक्ष्मणश्च महाबलः ॥ ६

उ उपवासपरो रामः तपस्वी दण्डके वने ।
सभार्यस्सभ्रातृकश्च चचार मुनिभिस्स्तुतः ७

ऊ ऊनशूर्पणखादोषात् रामस्य च पराक्रमात् ।
तत्र पाराभवः कालो राक्षसानामुपस्थितः ॥ ८

ऊ२ ऊनस्तु रामवीर्येण रावणो नाम राक्षसः ।
तेन दुष्टात्मना सीता छलेनापहृता वने ॥ ९

ऋ ऋषिधर्मसमायुक्तं मारीचं नाम मातुलम् ।
आगम्य रावणः पापः ततस्तद्वाक्यमब्रवीत् ॥ १०

ॠ कृतिं कृत्वा छलेन त्वं दूरं गच्छ वनेषु मे ।
दशरथात्मजं हत्वाऽरामं तत्र करोम्यहम् ॥ ११

ऌ लोम्ना काञ्चनरूपेण मृगो भूत्वा स शृङ्गलृः ।
लोभयित्वा तु वैदेहीं व्यहरद् दण्डकावने ॥ १२

ॡ सीतां कमलपत्राक्षीं उपासीनां वने तदा ।
ॡकारकुटिलो हृत्वा रावणोऽगान्नभस्तलम् ॥ १३

ए एतस्मिन्नन्तरे गृध्रो जटायुर्नाम धार्मिकः ।
तेन ताभ्यां समाख्यातं सीतायाः परिमार्गणे ॥ १४

ऐ ऐश्वर्य-मद-मत्तेन रावणेन खगाधिपम् ।
हत्वा तस्मिन् वने गृध्रं सीता लङ्कां प्रवेशिता ॥ १५

ओ ओघशोकनिमग्नस्सः सीतावत्सलराघवः ।
कपिना हरिराज्येन सुग्रीवेण समागतः ॥ १६

औ औषधं परमं प्राप्तः सुग्रीवो रामदर्शनात् ।
हत्वा च वालिनं रामः सुग्रीवं चाभिषेचयत् ॥ १७

अम् महाकपिं हनूमन्तं सत्यसन्धं दृढव्रतम् ।
सुग्रीवः प्रेषयामास सीतायाः परिमार्गणे ॥ १८

अः हनूमान् वानरश्रेष्ठो जाम्बवान् कृतनिश्चयः ।
तारेयः कपिभिस्सार्धं भ्रमन्तो दक्षिणां दिशम् ॥ १९

क कथयन्तस्स्ववृत्तान्तं कुत्रचित् कालपर्ययात् ।
अलब्ध्वाऽन्तश्च वैदेहीं चक्रुः प्रायोपवेशनम् ॥ २०

ख खगस्तु सिद्धकार्यार्थः सम्पातो नाम धार्मिकः ।
तेन तेषां समाख्यातं सीतायाः परिमार्गणे ॥ २१

ग गत्वा पारं समुद्रस्य वेगेन गरुडो यथा ।
दृष्ट्वा लङ्कां च नगरीं सीतां च जनकात्मजाम् ॥ २२

घ घनेऽशोकवने देशे समागम्य च मैथिलीम् ।
हनूमान् लब्धसन्देशो राक्षसान् विन्यसूदयत् ॥ २३

ङ ङकारसदृशीं कृत्वा ललाटे भृकुटिं तथा ।
क्रुद्धेनेन्द्रजिता धीरो गृहीतो हनूमान् कपिः ॥ २४

च चन्द्रमण्डलसंकाशं लांगुलं तस्य राक्षसाः ।
शुक्लैरावेष्टितं वस्त्रैः तैलाभ्यङ्गमदीपयन् ॥ २५

छ छलयित्वा ततस्सर्वान् राक्षसान् विपुलो हरिः ।
लांगूलेन प्रदीप्तेन लंकामादीपयत् पुरीम् ॥ २६

ज जलमध्ये स निर्वाप्य लाङ्गूलं प्लवगेश्वरः ।
कृतामयं पुरं दग्ध्वा पुनरागमनोत्सुकः ॥ २७

झ झषालयं समुत्प्लुत्य हरिरुत्तम आगतः ।
सिद्धकार्योऽतित्वरितः प्रदेशं यत्र राघवः ॥ २८

ञ ञकारवदनो भूत्वा हनूमान् स हरीश्वरः ।
न्यवेदयदशेषेण राघवाय महात्मने ॥ २९

ट टकारसदृशं चापं सशरं रघुनन्दनः ।
गृहीत्वा प्रस्थितस्तूर्णं सीतायाः परिमार्गणे ॥ ३०

ठ ठकाराकारनेत्राणां हरीणामयुतव्रताः ।
सुग्रीवस्याग्रतो यान्ति प्रीताः कर्तव्यलालसाः ॥ ३१

ड डयन्त इव वेगेन गत्वा पारं महोदधेः ।

राघवश्शरमुद्यम्य पश्चात्तत्रोपयाचितः ॥ ३२

ढ ढकारसदृशीं कृत्वा ललाटे भ्रुकुटीं तदा ।
हनूमानग्रतो याति राघवस्य हिते रतः ॥ ३३

ण णकारसदृशैः पद्मैः प्राञ्जलिः प्रत्युपस्थितः ।
उवाच सागरो रामं सेतुं मम जले कुरु ॥ ३४

त तस्य तद्वचनं श्रुत्वा सुग्रीवो नळमब्रवीत् ।
नळ ! भद्रं कुरुष्व त्वं सेतुं तत्र महार्णवे ॥ ३५

थ स्थूलं मृष्टोपमं दिव्यं विश्वकर्मसुतो नलः ।
चकार सेतुं धर्मात्मा सागरे मकरालये ॥ ३६

द दशयोजनविस्तीर्णं आयतं शतयोजनम् ।
येन वानरसेनाऽगात् समुत्पत्य महोदधिम् ॥ ३७

ध धनुर्वीर्यं समाश्रित्य राघवस्सह वानरैः ।
राक्षसान् योधयामास क्रोधसंरक्तलोचनः ॥ ३८

न नगर्यां मोघयुद्धायां रावणस्सह राक्षसैः ।
ततो द्वाराद् विनिष्क्रम्य चकारायोधनं महत् ॥ ३९

प पनसश्शरभो मैन्दो नीलो मारुतिरङ्गदः ।
नानावृक्षैश्शिलाभिश्च राक्षसान् विन्यसूदयन् ॥ ४०

फ फलितैः पादपैः कूले रोषिताश्शक्तितोमरैः ।
राक्षसाः खण्डनं चक्रुः वानराणां चमूमुखे ॥ ४१

ब बलवान् राघवश्श्रीमान् दशग्रीवं जघान सः ।
निहतं रावणं दृष्ट्वा विभीषणमथाब्रवीत् ॥ ४२

भ भक्तोसि मयि रक्षेन्द्र धार्मिकश्चापि सुव्रतः ।
अराक्षसमिदं कर्म कृतं तुष्टोऽस्मि ते विभो ! ॥ ४३

म मया दत्तं राज्यमिदं भुङ्क्ष्व पूलस्त्यनन्दन ! ।
सपुत्रभृत्यानुचरो भुङ्क्ष्व राज्यमकण्टकम् ॥ ४४

य यदर्थमयमारम्भः कृतो मे राक्षसेश्वर ।
तामहं द्रष्टुमिच्छामि गच्छ त्वं सहलक्ष्मणः ॥ ४५

र रक्तः प्रियहिते युक्तो लक्ष्मणेन विभीषणः ।
आरोचयच्च वैदेहीं काकुत्स्थाय महात्मने ॥ ४६

ल लङ्कां प्रविश्य नगरीं ददर्श जनकात्मजाम् ।
कृशां विवर्णां मलिनां दर्शयामास सुप्रियाम् ॥ ४७

व वरारोहां तदा दृष्ट्वा रामश्चिन्तासमन्वितः ।
अग्नौ विशुद्धामादाय पुष्पकेण ययौ ततः ॥ ४८

श शत्रून् हत्वाऽतिवेगेन पूर्वमागम्य राघवः ।
नन्दिग्रामे समादाय भरतं मित्रवत्सलम् ॥ ४९

ष षाड्गुण्य सुगतिश्श्रीमान् राघवस्सह सीतया ।
सङ्गतो भ्रातृभिस्सार्धं मातृभिस्स समागतः ॥ ५०

स समेत्य हृष्टहृदयः पौरजानपदैस्सह ।
गवां शतसहस्राणि ब्राह्मणेभ्यः प्रदत्तवान् ॥ ५१

ह हतशत्रुर्महेन्द्राण्या शतक्रतुरिवापरः ।
शतं वर्षसहस्राणां रामो राज्यमवासयत् ॥ ५२
--------------------
अनुबन्धः

क्ष क्षत्रं ब्रह्माच्युतं जीयात् जीवनं जगतां परम् ।
ज्ञानानन्दमयं ज्योतिः ईळे तन्मातृकाक्षरम् ।। १

सपञ्चशतसाहस्रसंवत्सरसनातनम् ।
प्राङ्मातृकाक्षरैश्श्लोकैः सार्धपञ्चाशतां स्थितम् ।। २

बलिद्वीपान्तरे लब्धं जानकीकविनिर्मितम् ।
रामेण संस्कृतं जीयात् श्रीरामायणमक्षरम् ।। ३

इदं बरोडानगरे राज्ञा मुद्रापितं पुरा ।
स्वीकृतं बालबोधार्थं बालिद्वीपप्रबन्धगम् ।। ४

नष्टवर्ण-विसंवादं शमयन् वर्णसङ्करम् ।
ऊप्लुतं ऌविकाराङ्कं अभेदं रलयोदशन् ।। ५

व्युदस्यन् क्वचिदेवात्र श्लोकलक्षणभञ्जनम् ।
ओं श्रीमदक्षरं रामायणमित्यभिधां दिशन् ।। ६

प्रथमाक्षरयोगेन मातृकाक्षरयोजनात् ।
षष्टिवर्णपरीवर्तात् नवत्यक्षरयोजनात् ।। ७

तत्र तत्र च संरक्षन् साभिप्रायं वचः कवेः ।
अष्टश्लोकीं ततः कुर्वन् रामस्संस्कृतवानिदम् ।। ८

शुभमस्तु ।।